टी॰ कवियंमहाराष्ट्रभाषयाकडियाळीतिप्रसिद्धं । "नार्योकवीखलीनंकवियंत्वानातुरंगमुखभांडमितिवोपालितः ।" कंदंपद्मिनीमूलादि । "कंदोऽस्त्रीसू
रणेसस्यमूलेजलधरेपुमानितिमेदिनी । कच्चित्कर्मेतिपाठः ।" कार्पासंवस्त्रयोनिभेदः । "पारावारःपयोराशौपारावारंतटद्वयमितिहैमः । युगंधरंकूबरं ।"
यूपंयज्ञांगभेदः । प्रग्रीवंद्रुमशीर्षकं । "वातायनंमुखशालावा ।" पात्रीवंयज्ञपात्रभेदः । यूपंमंडइतिप्रसिद्धं । "मुद्रामलकयूपस्तुग्राहीपित्तकफेहितइत्यु

कवियंकंदकार्पासंपारावारंयुगंधरं ॥ यूपंप्रग्रीवपात्रीवेयूपंचमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौघृतादीनांपुंस्त्वाद्यंवैदिकंध्रुवं ॥ तन्नोक्तमिहलोकेपितच्चेदस्यस्तुशेषवत्
॥ ३६ ॥ इतिपुन्नपुंसकसंग्रहवर्गः ॥ स्त्रीपुंसयोरपत्यांताद्विचतुःषट्पदोरगाः ॥

क्तंवैद्यके" चमसचिक्कसौअर्धर्चादौअस्मिन्वर्गेपुन्नपुंसकाधिकारेइतियावत् । घृतादीनांपुंस्त्वाद्यंपाणिन्यादिभिरुक्तंतत्तुवैदिकं । वेदेप्रसिद्धमित्यर्थः।
अतस्तदिहनोक्तं तच्चलोकेप्यस्तिचेत्शेषवत्उक्तादन्यःशेषस्तद्वदस्तुशिष्टप्रयोगतोग्राह्यमित्यर्थः ॥ ३६ ॥ इतिपुन्नपुंसकसंग्रहवर्गः ॥ अपत्यांताअ
पत्यप्रत्ययांताःस्त्रीपुंसयोःस्युः । यथा । उपगोःअपत्यंपुमान्औपगवः । उपगोरपत्यंस्त्रीऔपगवी । वैदेहः । वैदेही । गार्ग्यः । गार्गी । द्विचतुःषट्पदोरगाः ।
द्विपदचतुष्पदषट्पदवाचिनोभुजगवाचिनश्च

जातिभेदाःस्त्रीपुंसयोः । तत्रद्विपदजातिभेदोयथा । मानुषःपुमान् । मानुषीस्त्री । ब्राह्मणः । ब्राह्मणी । "शूद्रः । शूद्रा । अजादित्वाट्टाप् ।" चतुष्पदो भेदोयथा । मृगः । मृगी । हयः । हयी । षट्पदभेदोयथा । भृंगः । भृंगी । उरगोयथा । उरगः । उरगी । नागः । नागी । स्त्रीयोगैःसहपुमाख्याःपुन्मानिस्त्रीपुंसयोः । यथा । इंद्रः । इंद्राणी । मातुर्भ्राताम‍ातुलः । तस्यस्त्रीमातुली । पुंसिवर्तमानोमातुलः । स्त्रीयोगात्स्त्रीत्वेपिवर्तते । शूद्रस्यस्त्रीशूद्री । मल्लकादयश्चस्त्रीपुंसयोः । मल्लकःपुष्पवल्लीभेदः । स्त्रियांतुमल्लिका ॥ २७॥ ऊर्मिस्तरंगः । "मुनिरितिपाठः । मुनिर्यतीगुदीबुद्धपिलायागस्तिकिंशुकइतिवि

जातिभेदाःपुमाख्याश्चस्त्रीयोगैःसहमल्लकः ॥ २७ ॥ ऊर्मिर्वराटकःस्वातिर्वर्णकोझाटलिर्मनुः ॥

मूषास्पाटीकर्कंधूर्यष्टिःशाटीकटीकुटी ॥ ३८ ॥ इतिस्त्रीपुंसशेषसंग्रहवर्गः ॥

श्वप्रकाशः ।" वराटकःकपर्दकः । स्त्रियांतुवराटिका । स्वातिर्नक्षत्रं । "वर्णकश्चंदनं । विलेपनेचंदनेचवर्णकंपुन्नपुंसकमितिरभसः । वर्णकश्चारणेस्त्री तुचंदनेचविलेपने । द्वयोर्नील्यादिषुस्त्रीस्यादुत्कर्षेकांचनस्यचेतिमेदिनी । झाटलिः किंशुकवृक्षसदृशः । मोखाइतिप्रसिद्धः । मनुःस्वायंभुवादिः मंत्रो वा. मूषातैजसावर्तनी । सृपाटीपरिमाणभेदः ।" कर्कंधूर्बदरी । शाटीपटभेदः । कटीदेहावयवः । कुटीगृहकोष्टकः । अत्रमूषानकारांतः ॥ ३८ ॥ इतिस्त्रीपुंसशेषवर्गः ॥

भावक्रिययोः भावेकर्मणिचवर्तमानःष्यञ्प्रत्ययोवुञ्प्रत्ययश्चकचित्स्त्रीनपुंसकयोर्वर्तते । तत्रष्यञ्प्रत्ययमुदाहरति । औचित्यमिति । उचितस्यभाव. औचित्यं । औचितीच । मित्रस्यकर्ममैत्र्यंमैत्रीवा । "एवसामग्र्यसामग्रीवा । आर्हत्यंआर्हती ' वुञ्प्रत्ययस्तुवैरमैथुनिकादिवुण् इत्थंप्रागुदाहृतः । तथामिथुनस्यभावःकर्मवामैथुनिका । मैथुनकंच ॥३९॥ तत्पुरुषेवष्ठ्यंतपष्ठीविभक्त्यंतंप्राक्पदंयामाता पष्ठ्यंतप्राक्पदा सेनाद्याःस्त्रियांक्लीबेचस्युः । उदाहरति । नृणासेनानृसेनं । नेतिविकल्पान्नृसेनापि । इतरइतिएवमन्यत्राप्युदाहर्तव्यमित्यर्थः । यवसुरंयवसुरा । कुड्यस्यच्छायाकुड्यच्छा

स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्कचिच्चवुञ् ॥ औचित्यमौचितीमैत्रीमैत्र्यंवुञ्प्रागुदाहृतः ॥ ३९ ॥ पष्ठ्यंतप्राक्पदाःसेनाछायाशालासुरानिशा ॥ स्यान्नृसेनंश्वनिशंगोशालमितरेचदिक् ॥ ४० ॥ आबन्नंतोत्तरपदोद्विगुश्चापुंसिनश्चलुप् ॥ त्रिखट्वंचत्रिखट्वीचत्रितक्षंचत्रितक्ष्यपि ॥ ४१ ॥ ॥ इतिस्त्रीनपुंसकशेषः ॥

यंकुड्यच्छायावा । पष्ठ्यंतप्राक्पदाचेच्छायाक्लीबएवेतिप्राग्दर्शितं ॥ ४० ॥ आबंतोत्तरपदोऽन्नंतोत्तरपदश्चद्विगुसमासःपुंसिनस्यात् । किंतुस्त्रीनपुंसकयोः । अन्नंतोत्तरपदस्ययोंऽत्यनकारस्तस्यलुपलोपश्चस्यात् । आबंतात्यपदमुदाहरति । त्रिखट्वमिति । तिस्रःखट्वाः समाहृताः त्रिखट्वं । त्रिखट्वीच । अन्नंतोत्तरपदोयथा । त्रयस्तक्षाणःसमाहृतास्त्रितक्षं । त्रितक्षीच । तक्षन्शब्दस्यात्यनकारोलुप्तः ॥ ४१ ॥ ॥ इतिस्त्रीनपुंसकसंग्रहः ॥

पात्रादयोदाडिमांतास्त्रिपुत्रिलिंगाः। पात्रं पात्रः। इत्यादि। पात्र्यमत्रेत्रिष्वितिमेदिनी। पात्रंतुकूलयोर्मध्येपर्णेनृपतिमंत्रिणि। योग्यभाजनयोर्यज्ञभाण्डेनाट्यानुकर्तरीतिहैमः। वाटःपथिस्त्रीवाटंवरण्डेऽगान्नभेदयोः॥ वाटीवास्तौगृहोद्यानकट्योरितिहैमः।" कुवलंबदरीफलं। "कुवलंचोत्पलेमुक्ताफलेपिबदरीफले। कुड्मलेमुकुरेपुंसिनद्वयोर्नरकांतरइतिमेदिनी।" इतित्रिलिंगशेषः॥ ॥ द्वंद्वैकत्वस्याव्ययीभावस्यचलिंगंप्रागुक्तं। स्वप्रधानेउभयपदप्रधानेइतरेतराख्येद्वंद्वसमासेचतत्पुरुषेचयत्परमंतिमपदंतस्यलिंगंतदेवलिंगंस्यात्। तत्रद्वंद्वेयथा। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तत्पुरुषेयथा। धान्येनार्थोधान्यार्थः। सर्पाद्भीतिःसर्पभीतिः। सर्पभयं। वाप्यश्वः॥ ४२॥ उक्तस्यतत्पुरुषलिंगस्यापवादमाह। अर्थेति। अर्थांतश

त्रिपुपात्रीपुटीवाटीपेटीकुवलदाडिमौ॥ इतित्रिलिंगशेषसंग्रहः॥ परंलिंगंस्वप्रधानेद्वंद्वे॥

तत्पुरुषेपितत्॥ ४२॥ अर्थांताःप्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः॥

ब्दाः परोपगाः परगामिनः वाच्यलिंगाइत्यर्थः। यथाद्विजायायंद्विजार्थःसूपः। द्विजार्थायवागूः। द्विजार्थंपयः। अर्थेननित्यसमासोविशेष्यलिंगताचेतिवक्तव्यमितिवार्तिकं। प्रेति। प्राद्यलंप्राप्तापन्नपूर्वा.परोपगाः। "परविशेष्यमुपगच्छंतीत्यर्थ.।" तत्रप्रादिपूर्वोयथा। अतिक्रांतोमालामितिमालोहारः। अतिक्रांतामालामतिमालेयं। अतिमालमिदं। अवकुष्टः कोकिलयाअवकोकिलः। अलंपूर्वोयथा। अलंकुमार्यैइत्यलंकुमारिरयं। अलंकुमारिरियं। अलंकुमारिइदं। प्राप्तजीविकोद्विजः। प्राप्तजीविकास्त्री। प्राप्तजीविकमिदं। एवमापन्नजीविकः।

टी० परमिति । विरोधे विप्रतिषेधे सति परलिंगानुशासनं प्रवर्तते । यथा मानुष शब्दस्य कपणभ्रमरोपांतात् इति प्रागुक्तविधिना पुंस्त्वे एव प्राप्ते सति द्विचतुःषट्पदेत्यनेनोत्तरनोक्तेन तत्पुंस्त्वविधिर्निश्चेयः । यथा मानुषीयं । मानुषीयमिति । शेषमिति । शेषमत्रानुक्तं । अभिधानादिकं शिष्टानां महाकवीनां भाष्यकारादीनां प्रयोगतो ज्ञेयं । यद्वा अनुक्तं शब्दलिंगं शिष्टप्रयोगतो बोद्धव्यं । लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येति भाष्योक्तेरित्यर्थः ॥ ४६ ॥ उक्तमुप

परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥ ॥ इति लिंगादिसंग्रहवर्गः ॥ इत्यमरसिंहकृतौ नामलिंगानुशासने ॥ सामान्यकांडस्तृतीयः सांग एव समर्थितः ॥ ४७ ॥

संहरति । इतीति । इत्येवंप्रकारेणामरसिंहस्य कृतौ नामलिंगशास्त्रे सामान्यनामा तृतीयः कांडः । प्रस्तावो वर्गसमूहो वा अंगैः सहितः समर्थितो निरूपित इत्यर्थः ॥ ४७ ॥ ॥ श्रीमत्यमरविवेके महेश्वरेण विरचित इत्थं । सामान्यकांड एषों ऽतिमः समाप्तः ॥ विशेष्यनिघ्नवर्गस्य मूलश्लो० ११२॥ क्षे० श्लो० । संकीर्णव० मू० २३ क्षे० । नानार्थव० २५७ क्षे० ७॥ । अव्ययव० मू०
मू० श्लो० ४८२॥ क्षे० ७॥ सर्वे मिलि०